

षष्ठः पाठः

# l eqzV%

तृतीया-चतुर्थी-विभक्तिः



एषः समुद्रतटः। अत्र जनाः पर्यटनाय आगच्छन्ति। केचन तरङ्गैः क्रीडन्ति। केचन च नौकाभिः जलविहारं कुर्वन्ति। तेषु केचन कन्दुकेन क्रीडन्ति। बालिकाः बालकाः च बालुकाभिः बालुकागृहं रचयन्ति। मध्ये मध्ये तरङ्गाः बालुकागृहं प्रवाहयन्ति। एषा क्रीडा प्रचलति एव। समुद्रतटाः न केवलं पर्यटनस्थानानि। अत्र मत्स्यजीविनः अपि स्वजीविकां चालयन्ति।

अस्माकं देशे बहवः समुद्रतटाः सन्ति। एतेषु मुम्बई-गोवा-कोच्चि-कन्याकुमारी-विशाखापत्तनम्-पुरीतटाः अतीव प्रसिद्धाः सन्ति। गोवातटः विदेशिपर्यटकेभ्यः समधिकं रोचते। विशाखापत्तनम्-तटः वैदेशिकव्यापाराय प्रसिद्धः। कोच्चितटः नारिकेलफलेभ्यः ज्ञायते। मुम्बईनगरस्य जुहूतटे सर्वे जनाः स्वैरं विहरन्ति। चेन्नईनगरस्य मेरीनातटः देशस्य सागरतटेषु दीर्घतमः।











भारतस्य तिसृषु दिशासु समुद्रतटाः सन्ति। अस्माद् एव कारणात् भारतदेशः प्रायद्वीपः इति कथ्यते। पूर्वदिशायां बङ्गोपसागरः दक्षिणदिशायां हिन्दमहासागरः पश्चिमदिशायां च अरबसागरः अस्ति। एतेषां त्रयाणाम् अपि सागराणां सङ्गमः कन्याकुमारीतटे भवति। अत्र पूर्णिमायां चन्द्रोदयः सूर्यास्तं च युगपदेव द्रष्टुं शक्यते।



## शब्दार्थाः

| | | | |
|---|---|---|---|
| **समुद्रतटः** | - | समुद्र का किनारा | sea beach |
| **पर्यटनाय** | - | घूमने के लिये | for excursion |
| **तरङ्गैः** | - | लहरों से/ के साथ | with waves |
| **नौकाभिः** | - | नौकाओं के द्वारा | by the boats |
| **जलविहारम्** | - | जलक्रीडा | water game |
| **बालुकाभिः** | - | बालुओं से | with sands |
| **बालुकागृहम्** | - | बालू का घर, घरौंदा | sand-houselet |
| **मध्ये-मध्ये** | - | बीच-बीच में | at some interval |
| **प्रवाहयन्ति** | - | धो देते हैं, बहा देते हैं | wash out |
| **प्रचलति एव** | - | चलती ही रहती है | keeps going on |
| **पर्यटनस्थानानि** | - | घूमने की जगह | touristspot |
| **मत्स्यजीविनः** | - | मछुआरे | fishermen |
| **स्वजीविकाम्** | - | अपनी जीविका को | means of one's livelihood |
| **चालयन्ति** | - | चलाते हैं | causing to move |
| **अतीव** | - | बहुत अधिक | excessive |













| | | | |
|---|---|---|---|
| **स्वैरम्** | – | बे-रोक टोक/यथेच्छ | as one pleases |
| **विहरन्ति** | – | घूमते हैं/ टहलते हैं | roam |
| **दीर्घतमः** | – | सबसे लम्बा | longest |
| **प्रायद्वीपः** | – | तीन तरफ जल से घिरा भू भाग | peninsula |
| **सङ्गमः** | – | मिलन | confluence |
| **युगपदेव**(युगपत्+एव) | – | एक ही साथ | at the same time |
| **द्रष्टुं शक्यते** | – | देखा जा सकता है | may be seen |

## अभ्यासः



**1. उच्चारणं कुरुत–**

| | | |
|---|---|---|
| तरङ्गैः | मत्स्यजीविनः | विदेशिपर्यटकेभ्यः |
| सङ्गमः | तिसृषु | वैदेशिकव्यापाराय |
| प्रायद्वीपः | बङ्गोपसागरः | चन्द्रोदयः |

**2. अधोलिखितानां प्रश्नानाम् उत्तरं लिखत–**

(क) जनाः काभिः जलविहारं कुर्वन्ति?

(ख) भारतस्य दीर्घतमः समुद्रतटः कः?

(ग) जनाः कुत्र स्वैरं विहरन्ति?

(घ) बालकाः बालुकाभिः किं रचयन्ति?

(ङ) कोच्चितटः केभ्यः ज्ञायते?









**3. मञ्जूषातः पदानि चित्वा रिक्तस्थानानि पूरयत-**

| बङ्गोपसागरः | प्रायद्वीपः | पर्यटनाय | क्रीडा | सङ्गमः |
|---|---|---|---|---|

(क) कन्याकुमारीतटे त्रयाणां सागराणां .................... भवति।

(ख) भारतदेशः .................... इति कथ्यते।

(ग) जनाः समुद्रतटं .................... आगच्छन्ति।

(घ) बालेभ्यः .................... रोचते।

(ङ) भारतस्य पूर्वदिशायां .................... अस्ति।

**4. यथायोग्यं योजयत-**

| | |
|---|---|
| समुद्रतटः | ज्ञानाय |
| क्रीडनकम् | पोषणाय |
| दुग्धम् | प्रकाशाय |
| दीपकः | पर्यटनाय |
| विद्या | खेलनाय |

**5. तृतीयाविभक्तिप्रयोगेण रिक्तस्थानानि पूरयत-**

**यथा-** व्योमः मित्रेण सह गच्छति। (मित्र)

(क) बालकाः .................. सह पठन्ति। (बालिका)

(ख) तडागः .................. विभाति। (कमल)

(ग) अहमपि .................. खेलामि। (कन्दुक)

(घ) अश्वाः .................. सह धावन्ति। (अश्व)

(ङ) मृगाः .................. सह चरन्ति। (मृग)











6. **अधोलिखितं वृत्तचित्रं पश्यत। उदाहरणानुसारेण कोष्ठकगतैः शब्दैः उचितवाक्यानि रचयत–**




यथा–

1. रहीमः मित्रेण सह क्रीडति।
2. ....................................।
3. ....................................।
4. ....................................।
5. ....................................।
6. ....................................।
7. ....................................।
8. ....................................।









7. **कोष्ठकात् उचितपदप्रयोगेण रिक्तस्थानानि पूरयत-**

(क) धनिकः .................. धनं ददाति। (निर्धनम्/निर्धनाय)

(ख) बालः .................. विद्यालयं गच्छति। (पठनाय/पठनेन)

(ग) सज्जनाः .................. जीवन्ति। (परोपकारम्/परोपकाराय)

(घ) प्रधानाचार्यः .................. पारितोषिकं यच्छति। (छात्राणाम्/छात्रेभ्यः)

(ङ) .................. नमः। (शिक्षकाय/शिक्षकम्)







